परं तु शुद्धस्य साधनतावच्छेदकस्यानवच्छेदकतामात्रे ।

(गा०) नियमे न तात्पर्यमित्यग्रिमेणान्वयः । स्नेहवत् स्पर्शादित्यत्र विनाप्युपाधिप्रवेशनं साध्यासमानाधिकरणतया स्वयमनुपाधिना शीतत्वेन केवलेन स्पर्शे साध्यसम्बन्धोऽवच्छिद्यते इत्यर्थकोऽन्वयः । सर्वत्र शीतपदं शीतस्पर्शपरम् । केवलेन । किञ्चिदवच्छेदकविशेषणतानापन्नेन । एतेन उपाधिपदस्योपाधिघटितपरत्वलभ्ये सोपाधिनिष्ठसाध्यसम्बन्धितायां उपाधिघटितधर्म एव स्वतोऽवच्छेदक इति नियमे तस्य पदस्य यथाश्रुतार्थपरत्वलभ्ये तादृशसाध्यसम्बन्धे ऽनुपाधिरेव स्वतोऽवच्छेदक इति नियमे च व्यभिचारो दर्शितः । अवच्छिद्यते इत्यस्य विशेषणतयाऽवच्छेदकत्वपरतालभ्ये उपाधिभिन्नस्य तदघटितस्य च तादृशावच्छेदकत्वाभावनियमे व्यभिचारं दर्शयति । निःस्नेहमित्यादिना । निःस्नेहं स्पर्शादित्यत्र विनाप्युपाधिप्रवेशं साधनव्यापकतया स्वयमनुपाधिना शीतान्यत्वेन विशेषणीभूय स्पर्शे साध्यसम्बन्धोऽवच्छिद्यते इत्यन्वयः । विशेषणीभूय । अवच्छेदकीभूते स्पर्शत्वे सामानाधिकरण्यसम्बन्धेन विशेषणीभूय । व्यभिचारप्रदर्शनाय ईदृशनियमे प्रकृतानुपयोगोऽपि बोध्यः । विशेषणतापन्नेनैवेति पूरणलभ्ये उपाधेः स्वतोऽनवच्छेदकत्वनियमे व्यभिचारं दर्शयति । शीतान्यस्पर्शत्वेन चेति । अस्य च शुद्धनिःस्नेहत्वाव्यापकत्वेऽपि पक्षधर्मजलोष्णस्पर्शान्यतरत्वावच्छिन्नसाध्यव्यापकतयोपाधित्वम् । अत्रापि नियमे प्रकृतानुपयोगो द्रष्टव्यः ।

ननु नियमस्यानभिप्रेतत्वे प्रकृतानुपयोगितेत्याशङ्कां परिहरति । परं त्विति । अनवच्छेदकतामात्रे इति । वह्न्यादिपदस्य साध्यादिसामान्यपरतया पूर्वोक्तस्य साधनतावच्छेदके साध्यसम्बन्धितावच्छेदकत्वस्य सोपाधौ तुकारेण व्यवच्छेदादिति भावः ।

उपाधिपदस्य साधनतावच्छेदकातिरिक्तपरतया तुकारस्य चैवकारार्थतया उपाधिनैवेति नियमपरत्वमपि सम्भवतीत्यपि केचित् ।

इति अनुमानगादाधर्यां विशेषव्याप्तिप्रकरणम् ॥

पत्त्रादिप्रेषणस्थानम् ।

जयकृष्णदास गुप्तः, सेक्रेटरी,
चौखम्बा संस्कृत सीरीज आफिस,
बनारस सिटी ।